अथ ग्रन्थसमाप्तिमाह—

**एत्थ समप्पइ एअं सीआलम्भेण जणिअरामब्भुअअम् ।**
**रावणवह त्ति कव्वं अणुराअङ्कं समत्थजणणिव्वेसम् ॥ ९५ ॥**

**इअ सिरिपवरसेणविरइए कालिदासकए दहमुहवहे महाकव्वे**
**पञ्च(न्द)रहो आसासओ परिसमत्तो ।**

[ अत्र समाप्यते एतत्सीतालम्भेन जनितरामाभ्युदयम् ।
रावणवध इति काव्यमनुरागाङ्कं समस्तजननिर्द्वेषम् ॥ ]

इति श्रीप्रवरसेनविरचिते कालिदासकृते दशमुखवधे महाकाव्ये पञ्चदश आश्वासकः परिसमाप्तः ।

एतद्रावणवध इति नाम काव्यमत्र समाप्यते । कविनेत्यर्थात् । कर्म कर्तरि वा । एतदेव स्कन्धकं तत्समाप्तिस्थानमित्यर्थः । किंभूतम् । सीताया लम्भेन प्राप्त्या जनितो रामस्याभ्युदयो यत्र वर्णितत्वेनेत्यर्थः । पुनः कीदृक् । सीतां प्रति रामानुरागस्य सेतुबन्धरावणवधादिरूपोऽङ्कश्चिह्नं यत्र तद्गतज्ञापकत्वात् । अथ च अनुरागपदरूपोऽङ्कः प्रत्याश्वासकान्तेऽसाधारणं चिह्नं यस्येत्यर्थः । एवं समस्तजनस्य द्वेषशून्यं सीतारामसंबन्धित्वेनानुरक्तसर्वजनमित्यर्थः ॥

सीतासंप्राप्तिदशया रामदासप्रकाशिता ।
रामसेतुप्रदीपस्य पूर्णा पञ्चदशी शिखा ॥
सेतुग्रन्थसमुद्रादर्था मणयो भयाकृष्टाः ।
उपदेशसहकृतेन्द्रियपटुभिः प्राज्ञैः परीक्ष्यन्ताम् ॥

चक्षुर्भूतारिशीतांशु( १६५२ )भिरभिगणिते साहसाङ्कस्य वर्षे
वर्षे जल्लालदीन्द्रक्षितिमुकुटमणेरप्यनन्तागमा( ४० )भ्याम् ।
पञ्चम्यां शुक्लपक्षे नभसि गुरुदिने **रामदासेन** राज्ञा
विज्ञेनापूरितोऽयं तिथितुलितशिखो रामसेतुप्रदीपः ॥

सूर्याचन्द्रमसोरुदञ्चति कथा यावत्तथा दीप्यते
यावत्कौस्तुभकान्तिजालजटिला वैकुण्ठवक्षःस्थली ।
गङ्गावीचिभिरञ्चितो हरजटाजूटः समुज्जृम्भते
यावत्तावद**कब्बरे**ण जगती राजन्वती वर्तताम् ॥

इति श्रीश्रीमन्निखिलमहीमहेन्द्रमुकुटमणिमयूखमञ्जरीपिञ्जरीकृतकमलसकलसार्वभौमशिरोमणिश्रीम**दकब्बरजल्लालदीन्द्र**कृपाकटाक्षवीक्षितभानुभक्तिपरायणहृदयहर्म्येनिवासितनारायणमहाराजाधिराजश्रीश्री**रामदास**विरचितो रामसेतुप्रदीपो नाम ग्रन्थः परिपूर्णः ॥

---